**हिंगुजटा** । उ. ६. वाष्पिका ॥

**हिमम्** । सू. २० etc. चन्दनम् । "चन्दने तुहिने हिमम् । कर्पूरे तु पुमान शीतगुणेऽपि त्रिषु तद्वति । हिमा तु स्त्री निशीथिन्या"मिति केशवस्वामी । "हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गः" इति मेदिनी ॥

**हिमवद्गिरिसंभूता** । उ. ३६. सोमराजीपदस्य विशेषणम् । श्वेतवचेतीन्दुः ॥

**हिरण्यम्** । उ. ५. कनकम् । उत्तरपञ्चमाध्याये नागकेसरमित्येके ॥

**हिरण्यजं किट्टम्** । चि. १६. सुवर्णमलम् । रूप्योत्थं मलमित्यरुणदत्तः । सुवर्णमाक्षिकमित्येके ॥

**हिरण्यपुष्पी** । शा. १. लांगली । कलिकारिकेति डल्हणः । स्वर्णकेतकीति हाराणचन्द्रः । काञ्चनक्षीरीत्यन्येन शिवदीपिका । मुशलीति पाठ्यकारः । आरग्वध इत्यन्ये ॥

**हुताशः** । चि. १९. चित्रकः ॥

**हृदयम्** । चेतनास्थानम् । Heart । "दिवा प्रबुध्यतेऽर्केण हृदयं पुण्डरीकवत्" इति चरकः । "पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम् । जाग्रतस्तद्विकसति स्वपतश्च निमीलति" इति सुश्रुतः । "हृदयं नाम स्वतन्त्रपेशीनिर्मितं शून्योदरं यन्त्रम् । तद् अधोमुखबृहत्पद्ममुकुलाकारं, मध्यमाधरे फुस्फुसान्तराले पुरस्ताद्वामतस्तिर्यगवस्थितम्, हृदयधराख्येन कलाकोषेण प्रावृतं च । तस्य मूलदेशः दक्षिणतृतीयोपपर्शुकाया उरःफलकसन्धानादारभ्य वामद्वितीयोपपर्शुकाया उरःफलकसन्धानोपकण्ठं यावद्विस्तृतः । अग्रं तु तस्य वामतः पञ्चमषष्ठपर्शुकयोरन्तराले मध्यरेखाया बहिश्चतुरंगुलाद् दृश्यते, स्पर्शेनानुभूयते च नियतमाहन्यमानम्" । प्र. शा ॥

**ह्रस्वपञ्चमूलम्** । सू. ६ etc. **लघुपञ्चमूलम्** ॥

**हेम(न्)** । सू. ७ etc. **कनकम्** । विसर्पचिकित्सिते "शरैर्हेम्नापि वा हितः" इत्यत्र "शैरेलैर्हेन वा हितः" इत्येव चरकपाठः ॥

**हेम(न्)** । उ. २५. **नागकेसरम्** । पद्मकमित्येके । "कालीयकलताम्रास्थिहेमकालारसोत्तमै"रित्यत्र 'मञ्जिष्ठे'त्यर्थेन 'हेमकाला'मेकपदेन चक्रपाणिदत्तः व्याख्यायति ॥

**हेमचूर्णम्** । सू. ७. **सुवर्णभस्म** ॥

**हेमदुग्धा** । सू. १५. **काञ्चनक्षीरी** ॥

**हैमवती** । सू. १५. **श्वेतवचा** । "हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोमयोः" इति मेदिनी । "पारसीकवचा शुक्ला प्रोक्ता हैमवतीति सा" इति भावमिश्रः ॥

**हैयङ्गवीनम्** । उ. ३९. ह्योगोदोहोद्भवमिति । एकरात्रपर्युषिताद्दध्नः सद्योजातं नवनीतम् । ह्यो दोहस्य विकारो नवनीतं, नवीननवनीतम् । "हविर्ह्यस्तनदुग्धोत्थं तत् स्याद्धैयङ्गवीनकम्" इति । हिं.—ताजा मक्खन; म.—ताजे लोणी; मल.—पुतुवेण्ण पुत्तुवेण्णॆ; इं.—Fresh butter । "तत्तु हैयङ्गवीनं यद् ह्योगोदोहोद्भवं घृतम्" इति सिंहः । गुणाः—"हैयंगवीनं चक्षुष्यं दीपनं रुचिकृत्परम् । बलकृद् बृंहणं वृष्यं विशेषाज्ज्वरनाशनं" इति । see **नवनीतम्** ॥

**ह्रीबेरम्** । चि. १ etc. ह्रियै लज्जायै बेरमङ्गमस्य क्षुद्रत्वात् । **वालकम्** । रक्तपित्तचिकित्सिते पेयाकल्पने 'ह्रीबेर'मित्यत्र 'अंबु' इत्येव चरकपाठः ॥

पितामहोऽभून्मम रामवेद्यः
श्रीकुञ्ज्जुमामिस्तु तदीयसूनुः ।
सुतोऽभवं तस्य च तत्पितृव्य-
नामाऽप्यहं केरललब्धजन्मा ॥

पितुः सकाशादवबुद्धशास्त्रो
यः सौगतः शङ्करसोदरश्च ।
स्वतन्त्रचिन्तानुगतप्रतीति-
र्माणिक्यनामाऽस्मि विदां विधेयः ॥

कोषात्मकोऽष्टाङ्गहृदो मयायु-
र्वेदौषधीदुर्ग्रहशब्दचर्चः ।
युगाश्वनागेन्दुशके प्रणीतो
मुदे बुधानां हृदयप्रकाशः ॥

इति वैद्यवरश्रीकुञ्ज्जुमामिमहाशयात्मजश्रीमाणिक्य-
भिषग्विरचितो हृदयप्रकाशाभिध-
टिप्पणसहित अष्टांगहृदयकोषः समाप्तः ॥

# समाधिश्लोकः ।

शोणाजायाशकाब्दे ह्युदगयनयुतांऽगीरसे शुक्लपक्षे
पञ्चम्यामादिमर्क्षे मृगपतिकरणे फाल्गुने भौमवारे ।
ब्राह्माख्ये सन्मुहूर्ते वसुरसगवयः स्थूलकायं विहाय
प्रायात् श्रीकुञ्ज्जुमामिर्भिषगमृतपदं ध्याननिष्ठो गुरुर्मे ॥